# FOREWORD

This popular edition of the Asoka Inscriptions is based on materials collected for a bigger edition prepared by me and promised to be published by the Calcutta University many years ago. Pictures of the Piyadasi monuments, plates of the inscriptions and other illustrations could not be given in this edition for obvious reasons. They will be given in the University Edition.

I am much indebted to Mr. Manoranjan Ghosh M. A., now a scholar under the Governmet Archaeological Department who worked as a Paleographist with me for about a year and prepared for me copies of the original inscriptions in 1910—11.

It is for the first time that all the Piyadasi Inscriptions discovered up to this time with all their variants are published together and also that all of them (without variants) are translated into Sanskrit. The Maski Edict recently discovered in the Raichur district in the Nizam's state is a variant of the Minor Rock Edict inscribed by Asoka at Brahmagiri and two other places in Mysore as well as at Sahasram, Rupnath and Bairat. It consists of 8 lines and is to be read side by side with the other 6 variants (given here) of the Minor Rock Edict, as it forms the 7th variant of the same. A brief description if it will be found in the notes.

This humble work is but a payment of debt to the memory of the great Maurya Emperor from one living at the very site of the once glorious Maurya Capital.

PATNA,
10-12-1915.

RAMAVATARA SARMA

# BIBLIOGRAPHY

I. Fourteen Rock Edicts and seven Pillar Edicts—

Edited and Translated, Buhler, Ep. Ind. Vol II

II. Two Kalinga Edicts—

Edited and Translated, Burgess's Amaraoti, and Senart and Grierson Ind. Ant. XIX.

III. Minor Rock Edict—
- Siddharpura versions, Buhler, Ep. Ind. III.
- Sahasram, Rupnath and Bairat, Buhler, Ind. Ant. XXII.
- Maski version, Hyderabad Arch. Series, No. 1.

IV. Minor Pillar Edict—
- Sarnath, Ep. Ind. VIII.
- Kausambi, Ind. Ant. XIX.
- Sanchi, Ep. Ind. II.

V. Bhabra (Bhabru) Edict—Senart, Ind. Ant. XX.

VI. Queen's Edict—Buhler, Ind. Ant. XIX.

VII. Tarai Pillar Inscription—Buhler, Ep. Ind. V.

VIII. Cave Dedications (of Asoka and Dasaratha)—Buhler, Ind. Ant. XX.

---

## उपोद्घातः

चन्द्रगुप्तो नातिप्रौढवयाः सिन्धुतीरोपशल्यस्थमलिकचन्द्रस्य शिविरं प्राप्य तमनुगङ्गं विस्तीर्णस्य पाटलिपुरकेन्द्रकस्य नन्दराज्यस्य विजयाय किल प्रोत्साहयामासेति प्लुतार्कलेखादवगम्यते। प्रायोनुमीयते यदयं चतुरो राजकुमारः सैनिकेष्वलिकचन्द्रीयेषु प्राचीप्रवेशे भवतां सद्यः क्षयो भविष्यतीत्यादिवाक्यैः सुनिभृतं त्रासं जनयामास। तथाहि ज्ञातवृत्ते कुपितेलिकचन्द्रे स्कन्धावाराच्चन्द्रगुप्तो विनिष्क्रम्य क्वापि गतः। महतानुरोधेन सैनिकान् प्राचीविजयाय प्रार्थयमानोपि मगद्रोणीपतिर्न मनोरथसाफल्यमन्वभूत्। स्वदेशेभ्योतिविप्रकृष्टे विदेशे वर्तमाना भयाक्रान्ताः सैनिकाः स्वनायकं सास्रमप्यनपेक्ष्य प्राचीविजयाय मतिं नाकार्षुः। विनैव युद्धं चाणक्यशिष्येण विफलितदूरारोहिवाञ्छ्यारिष्टोत्तरशिष्यः प्रतीचीं प्रतिगन्तुमनुद्यत। नातिचिरेण च भव्यलूनपुरे कांचित् क्षपां मद्यादिदुर्व्यसनैः क्षपयन्सद्यो ज्वरग्रस्तोलिकचन्द्रः प्राणव्ययेनेन्द्रियविधेयतायाः प्रायश्चित्तमाचरन्नकाण्डे २६५ वर्षे विक्रमाब्देभ्यः पूर्वं व्यपद्यत।

विपन्ने वैदेशिके परिपन्थिनि चन्द्रगुप्तोपि चाणक्यसहायः पर्वतीयैरुत्तरापथे व्यूढैरप्रतिवार्यैः सैन्यैः पाटलिपुरीमुपरुध्य नन्दान्विनाश्य विक्रमाब्देभ्यः पूर्वं २६४ वर्षे भारतसाम्राज्यं लेभे चतुर्विंशतिं वर्षाणि च नयविक्रमोर्जितो महीं शशास।

अथ विक्रमाब्देभ्यः पूर्वं २४७ वर्षे शल्यको विजयी नामालिकचन्द्रदायादः सैरियराजस्तीर्णसिन्धुनदः पावनीं भारतभुवमाचक्राम चन्द्रगुप्तेन तरसाभिगम्य पराहतश्च वराकः पारेसिन्धु सुमहन्मण्डलं निजकन्यां च चन्द्रगुप्ताय समर्प्य करिणां पञ्च शतानि प्रतिगृह्य तेन सन्धिं चकमे। इत्थमाम्भिपुरुराजाभिसारेश्वरेभ्योलिकचन्द्रेणाच्छिन्नपूर्वान्पाश्चात्यविषयान् सहबलूचकलूतमयकर्णादिमहीभिः शल्यकादाच्छिद्य चन्द्रगुप्तो मगधराज्यं जगन्महनीयं व्यधात्। मेघस्तनाख्यः शल्यकराजदूतश्चिरं चन्द्रगुप्तसभामध्युवास। अलिकचन्द्रस्य विपन्नमात्रस्य साम्राज्यं खण्डशो विकीर्णम्। तस्य पौरस्त्यः प्रतिस्पर्धी तु निजं साम्राज्यमखण्डं सुसमृद्धं विसब्धमभिवधातापरनामन्यौरसे विन्दुसारे कुमारे संक्रमयन् प्राणाञ्जहौ।

## INTRODUCTION

It is gathered from Plutarch's writings that Chandragupta Maurya, not yet of mature age, visited Alexander's camp on the Indus' banks and encouraged him to conquer the Nanda Empire stretching along the Ganges, with its centre at Pataliputra. It is inferred that the clever Prince secretly produced fearful apprehensions in the minds of Alexander's soldiers by representing that they would be annihilated at once if they proceeded farther East. It is indeed certain that suspecting something Alexander became angry and Chandragupta left the camp for an unknown destination. The Macedonian monarch persistently urged his soldiers to conquer the East, but did not succeed in his ambition. The soldiers, so far from their native homes, were awe-stricken and despite their lord in tears could not make up their mind to conquer the East. Thus frustrated without a fight in his high-soaring aspirations by the disciple of Chanakya, the pupil of Aristotle was forced to turn back his steps to the West. Not long after, spending a night in reverly, the Great Alexander contracted fever and paid for his want of self-control by premature death in 323 B. C. His foreign rival dead, Chandragupta organised an irresistible army in the North with the help of Chanakya and besieging the Patali city destroyed the Nandas and becoming Emperor of India in 322 B. C. ruled the land with policy and vigor for 24 years.

Then in 305 B. C., Seleukos known as Nikator (or Victor) successor of Alexander in Syria, crossed the Indus and invaded the holy land of Ind. But Chandragupta marched against him with expedition and being repulsed, the humiliated Nikator had to conclude a treaty by giving away a big slice of land and a royal Princess to his rival in exchange for only 500 Elephants. Thus recovering from Seleukos the Western regions snatched away by Alexander's ambition from Poros, Ambhi and the Abhisara king, and receiving in addition the provinces of Baluchistan, Kelat, Makeran &c., Chandragupta made the Magadha Empire respectable in the eyes of the World. Megasthenes, Ambassador from Seleukos, resided for a long time at Chandragupta's Court. The Empire of Alexander fell to pieces just after his death,

शल्यके पराजिते पौरस्त्येन सम्राजा शश्वत्सख्यमुशन्ति स्म पाश्चात्त्या नृपतयः। अष्टसप्ततिवर्षवयस्के शल्यके तुरमयेणाजपुत्रेश्वरभ्रात्रा निहते विक्रमाब्देभ्यः पूर्वं २२२ वर्षे तत्सूनुरन्तियोकः सैरियाधिपतिर्बभूव। अन्तियोकेन प्रेषितो राजदूतो दैवमेघः कियन्तं कालं विन्दुसारसभायां न्यवसत्। दियनिशश्च तुरमयेणाजपुत्रेश्वरेण प्रहितो विन्दुसारस्यैव समये भारतावनिमाजगामेति प्रतिभाति। स एव विन्दुसारः पञ्चविंशतिं वर्षाणि महीं शशास।

अशोकवर्द्धनो विन्दुसारपुत्रश्चन्द्रगुप्तपौत्रः विक्रमाब्देभ्यः पूर्वं २१५ वर्षे भारतीयं राज्यासनमारुह्योपचत्वारिंशानि वर्षाणि राज्यं चकार। तक्षशिलायामुज्जयिन्यां तोषल्यां सुवर्णगिरौ तथान्यत्र च राजकुमारैरन्यैश्च स्वप्रतिनिधिभिरयं राज्यशासनसमीचां विदधे। स्वयमपि विन्दुसारस्य समये अशोकवर्धनः कुमारः प्रथमं तक्षशिलायां तत उज्जयिन्यां किल राजप्रतिनिधिर्बभूव। सैन्यविभागशासनविभागादिव्यवस्था चन्द्रगुप्तसमयाद्विन्दुसारसमये नातिभिन्नाभूदिति प्रतिभाति। राज्यविस्तारोऽपि तादृश एव प्रायोऽवस्थितः। अशोकेन तु निजाभिषेकान्नवमे वर्षे महानदीकावेरीमध्यगमासागरविस्तीर्णं कलिङ्गप्रदेशं विजित्य राज्यविस्तारो वर्द्धितः। युद्धे सार्धलक्षं प्राणिनामपव्यूढं लक्षं च निहतं यत्स्मृतिस्त्रयोदशे शिलालेखे शोकेनाकुलयति प्रियदर्शिनमशोकं राजानम्। आकुशाद्रेः प्रवरपुरकेन्द्रकेभ्यः कश्मीरेभ्य आनेपालेभ्यो मञ्जुपत्तनललितपत्तनादिभूषितेभ्य आमहिषमण्डलात्सुवर्णगिरिकेन्द्रकात्सौराष्ट्रेभ्य आगाङ्गमुखस्थेभ्यः समतटेभ्य आताम्रलिप्ताय सुमहद्राज्यमशोकस्याभूत्। महाप्रतापः किलाशोकनृपतिर्यवनेश्वरानन्तियोकादीन्निजपपदमाह्वयन्प्रकृतीरिव तानपश्यत्।

चन्द्रगुप्तसमये राजकीयशिविरं चतुर्लक्षमनुष्यभूषितमभूत्। सैन्ये च षड्लक्षाणि पत्तीनां त्रिंशत्सहस्राणि सादिनां नव सहस्राणि हस्तिनां बहूनि सहस्राणि च रथानामासन्। त्रिंशत्पुरुषात्मिकया परिषदा नौवाहनप्रत्यश्वरथगजात्मकषड्भागविभक्तया सांग्रामिकाधिकारो निरवर्त्यत। अनुशोणं नातिदूरे गङ्गाशोणसम्भेदादवस्थितं पाटलिपुरं मौर्यनृपाणां राजधानी बभूव। राजधानीशासनव्यवस्थापि त्रिंशदात्मिकया शिल्पिवैदेशिकजन्मादिवाणिज्यपण्यशुल्कसंबद्धषड्भागविभक्तया परिषदा अधीयत। पाटलिपुरात्तत्-

while his Eastern rival died passing peacefully his prosperous empire intact to his son Bindusara Amitraghata (or Amitrakhada). After the defeat of Seleukos, the Western Kings always preferred to be on good terms with the Eastern Emperor. When in Seleukos was assassinated in his 78th year by Ptolemy, brother of the Egyptian King, his son Antiochos succeeded to the throne of Syria. Antiochos' Ambassador Deimachos lived at the Court of Bindusara for sometime and it appears that Dionysius,sent by Ptolemy, King of Egypt, reached India during this reign. Emperor Bindusara ruled India for 25 years.

Asokavardhana, son of Bindusara and grandson of Chandragupta, succeeded to the Indian throne in 273 C.B. and ruled the Empire for about 40 years. He governed the vast Empire through Princes and through Vice-roys stationed at Takshasila, Ujjayini, Toshali, Suvarnagiri and probably some other places. Prince Asokavardhana himself served as a Viceroy under his father Bindusara first at Takshasila and then at Ujjayini. During Bindusara's reign civil and military administration remained almost the same as during the previous reign. The extent of the Empire too remained almost the same. But in his 9th regnal year, Asoka expanded his Empire by conquering the Kalinga country lying between the Mahanadi and the Kaveri and stretching to the Sea. During the Campaign one hundred and fifty thousand men were captured and a hundred thousand were killed the memory whereof perturbs the Gracious King Asoka with sorrow in the Rock Edit XIII. The Empire of Asoka thus extended to the Hindukush in the West, to Kashmir with its Centre at Pravarapura (Srinagar) in the Northwest, to Nepal with its cities Munju-Pattana, Lalitapattana &c. in the North, to Mysore with its centre at Suvarnagiri in the South, to Kathiawar in the Southwest, to the Plains at the mouths of the Ganges in the East, and to the Tamluk port in the Southeast.

Under Chandragupta the Royal Camp contained four hundred thousand persons and the army consisted of six hundred thousand foot soldiers, thirty thousand horsemen, nine thousand elephants and many thousand chariots. Administration of Military affairs was controlled by a war-ministy consisting of thirty men divided into six boards severally concerned with the Navy, Transport, Infantry, Cavalry, Chariotry and Elephantry. Pataliputra, the Maurya capital stood along

शिलामार्गेण सिन्धुपर्यन्तं गच्छन्मुख्यो राजमार्ग आसीत्। अन्येप्यध्वानस्तत्तद्देशगा अभवन्। मार्गाः प्रायः क्रोशार्धाङ्कस्तम्भैरभूष्यन्तेत्यादि मेधस्तनलेखेभ्योवगम्यते। अशोकसमये सर्वमेतद्यथास्थितम्। राजकुमारै राजकैर्महामात्रैः प्रान्तमहामात्रैर्धर्ममहामात्रैश्च प्रादेशिकधर्मयुतादिसहकृतैर्नृपादेशानुरोधेन प्रजाशासनं व्यधीयत। चापखड्गधारिणीभिर्यवनीभिः परिवृता मौर्यनृपतयो जनेषु दर्शनं व्यतरत्। महार्हसिंहासनस्थाश्च दासजनसंवाह्यमानगात्राः पौरकार्याणि शृण्वन्ति स्म। स्वयमशोकस्तु भुञ्जानोप्यवरोधेपि गर्भागारेपि वर्चस्यपि विनीतिष्युद्यानेपि सर्वत्र प्रतिवेदकोपनीतमर्थं पश्यतिस्म। अतिविप्रकृष्टेष्वपि प्रान्तेषु प्रजाहिताय बहुव्ययसाध्यान्यपि कर्माणि महतोद्योगेन मौर्यनृपतयः साधयन्तिस्म। तथाहि चन्द्रगुप्ताज्ञया पुष्यगुप्तेन श्रेष्ठिना निर्मितं सुदर्शनं नाम सौराष्ट्रीयं महासरस्तुषास्पः पारसीकराजः किलाशोकस्याज्ञया नवीकृतवानिति रुद्रदाम्नो लेखादवगम्यते।

साम्राज्ये स्थितः प्रायो नव वर्षाण्यशोकः साधारणभारतीयधर्मावलम्बी बभूव। ततो दशमे वर्षे बौद्धं धर्ममवलम्ब्य वर्षान्तरेसौ बौद्धं सङ्घं भेजे वाढं प्रक्रान्तश्चास्य धर्मस्यानुष्ठाने प्रचारणे च। जम्बूद्वीपे लब्धप्रसरान्देवान्भूदेवांश्चासत्या अमी इत्यसौ प्रख्यापयामास। कलिङ्गेषु निजसैन्यैरप्रतिवार्यैर्जितपूर्वेषु बहूनां प्राणिशतसहस्राणां शोचनीयमपवाहनं वधं च स्मरन्नौत्कण्ठ्यः(?)कालुलः किल नृपः सर्वत्र धर्मविजयमेव बहुमेने। धर्मविजयाय च स्वराज्येपि सर्वेषु चान्तेष्वष्टस्वपि योजनशतेषु यवनराजस्यान्तियोकस्य राज्ये तस्मात्परमपि चतुर्णां तुरमयान्तेकिणमगालिकसुन्दराणां विषयेषु नीचचोडपाण्ड्यताम्रपर्णीयविषवज्रनाभकनाभपङ्क्तिभोजप्रातिष्ठानिकान्ध्रपुलिन्दादिषु धर्मानुशासनप्रबन्धं व्यधित धार्मिको नृपतिः। कश्मीरगन्धारेषु मध्यान्तिकं महिषमण्डले महादेवं वनवासिषु रक्षितमपरान्तेषु यवनं धर्मरक्षितं महाराष्ट्रेषु महाधर्मरक्षितं यवनेषु महारक्षितं हैमवप्रदेशेषु मध्यमकाश्यपादीन् सुवर्णभूमौ शोणोत्तरौ सिंहलेषु निजभ्रातरं महेन्द्रमुपगुप्तस्य गुरोर्निर्देशेन धर्माचार्यकार्यानुष्ठानाय संप्रेष्य धर्मप्रचारं नृपो विदधौ। कतिपयानामेषां नामान्यद्यापि वैदिशेषु स्तूपेषु लिखितान्युपलभ्यन्ते।

the Sona River not far from its confluence with the Ganges. Administration of the Capital too was carried on by an assembly of 30 persons divided into six boards severally concerned with Artisans, Foreigners, Births and Deaths, Commerce, Articles of Trade, and Trade-duties. There was a trunk-road from the Capital to the Indus through Taxila, branching off into minor thoroughfares goining into various provinces. The roads were mostly supplied with mark-posts at every mile. All this is gathered from the writings of Megasthenes. During Asoka's reign all this remained unchanged. People were ruled by Princes, Chiefs, General Ministers, Provincial Ministers and Religious Censors assisted by District officers, Subordinate clergy &c. all obeying the King. The Maurya Emperors appeared in the public attended by Grecian women armed with bows and swords, and, seated on costly thrones, heard peoples' business, while the royal limbs were massaged by servants. As for Asoka himself, he received reports brought by Reporters on all occasions, even while eating, even in the harem, in the inner apartments, in the lavatory, in the gymnasium and in the garden. The Maurya Emperors accomplished costly and difficult works for public good even in the most distant provinces, an example of which was the lake Sudarsana built under Chandragupta's command by the merchant Prince Pushyagupta and repaired under Asoka's order by the Persian Prince Tushaspa. *

Emperor Asoka was for about 9 years after his coronation an adherent of the common Indian Religion. But in the 10th year he became a Bauddha and appears to have joined the monk-community in the next year and energetically engaged himself in the pursuit and spread of the Buddhistic duties. He announced that the gods and the human divinities worshipped in Asia were false. He preferred everywhere Victory of Virtue, ever bearing regretfully in his mind the tragic destruction and banishment of numerous lives that occurred in the Kalingas conquered by his irresistible forces. To achieve the Victory of Virtue, the good King made arrangements for the preaching of the Law in his own kingdom including the border lands covering altogether 6400 miles as well as in the dominions of the Ionian

* मौर्यस्य राज्ञः चन्द्रगुप्तस्य राष्ट्रियेण वैश्येन पुष्यगुप्तेन कारितमशोकस्य मौर्यस्य यवनराजेन तुषास्फेनाधिष्ठाय—line 8 Rudradaman's Inscription at Ginnar.

पाटलिपुरे प्राणिनां समालम्भं होमं चाशोको निषिषेध । समाजेषु पूर्वं राज्ञां समक्षे परोक्षे च गोरथाजयौ मल्लद्वन्द्व-युद्धानि करिमहोक्षादियुद्धानि चाभूवन् । ईदृशान् हिंसाबहु-लान्समाजान् प्रतिषिध्य धर्मसमाजानेव सर्वत्र प्रोत्साहयामास प्रियधर्मा नृपः । पूर्वं राजकीये महानसे बहूनि प्राणिशत-सहस्राणि सूपार्थं निहतानि । बौद्धधर्मावलम्बकालात्परतस्तु देवानां प्रियः प्रियदर्शी नृपतिः प्रथमं केवलं मयूरद्वयं कादा-चित्कैकेन मृगेण सहितं महानसायानुज्ञाय पश्चादेतदपि विनिवारितवान् । न केवलं राजकुले यावज्जनेष्वपि प्राणिनां हिंसां निर्लाञ्छनादिकं च नृपो नियमयामास । राज्याभिषेका-त्सप्तविंशे वर्षे तु शुकं सारिकामरुणं चक्रवाकं नान्दीमुखं गेलाटं जतुकामम्बापिपीलिकां दुडिमनस्थिकमत्स्यं जीवंजीवकं गङ्गाकुक्कुटकं शकुलमत्स्यं कमठं शल्यकं पर्णशशं सृमरं षण्डमोकपिण्डं पृषतं श्वेतकपोतं ग्रामकपोतं सर्वांश्चतुष्पदा-नप्रतिभोग्यानखाद्यांश्च सूकरीमेडकां च गर्भिणीं पाययन्तीं च पोतकांश्चाषाण्मासिकान्सर्वैश्चैवावध्यांश्चकाराशोकः कुक्कुटस्य पुंस्त्वोपघातं सजीवानां तुषाणां दाहमनर्थाय वा विहिंसायै वा दावदहनं जीवेन जीवपोषणं तिष्यादिदिनेषु मत्स्यानां वधं विक्रयं च तेष्वेव दिनेषु नागवने कैवर्तभोगे चान्येषामपि जीवनिका-यानां वधं सुदिवसेषु गोर्निर्लाञ्छनमजस्यैडकस्य सूकरस्यान्यस्य वा निर्लाञ्छनीयस्य जन्तोर्निर्लाञ्छनमश्वगवादिलक्षणं च निषिषेध । वर्षोत्सवेषु नृपः प्राणिनां बन्धनमोचनमादिदेश । दयालुना नृपेण द्वे चिकित्से मनुष्याणां च पशूनां च सर्वत्र स्वराज्ये च प्रातिवेशिकानां यवनादीनां च राज्येषु प्रवर्तिते । औषधानि पशुमानुषोपगानि यत्र यानि नासन्सर्वत्र हारितानि च रोपितानि च । मनुष्याणां पशूनां च छायार्थं मार्गेषु वृक्षा रोपिताः कूपाश्च खानिताः । अर्धक्रोशान्तरेषु निशागृहाण्यु-दपानानि च स्थापितानि । धर्ममहामात्रैर्धर्मयुक्तकृतैरयं भ्रातॄणां भगिनीनां देवीकुमाराणां प्रजानां च धर्मकार्याणि

King Antiochos and even beyond that in the countries ruled by Ptolemy, Antigonas, Magas and Alexander and also among the Nichas, Chodas, Pandyas, Tamraparniyas, Vishavajras, Nabhakas, Nabhapanktis, Bhojas, Pratishthanikas, Andhras and Pulindas. Under the guidance of his preceptor Upagupta, he sent he following missioneries to various countries—Maddhyantika to Kashmir and Gandharas, Mahadeva to Mysore, Rakshita to the Vanavasins, the Ionian Dharmarakshita to Gujrat, Maha-Dharmarakshita to the Maharashtras, Maharakshita to the Greeks, Madhyamakashyapa and others to Nepal, Sona and Uttara to Burma, and Mahendra (Asoka's brother) to Ceylon. Many of these names are inscribed in the Sanchi Stupas. Asoka prohibited slaughter and sacrifice of animals at Pataliputra. Before Asoka's time tournaments were held in the King's presence or in his absence where bullock-chariot races, athletic combats and elephant-and bull-fights were shewn. Prohibiting such cruel shows the king who loved virtue, encouraged religious spectacles everywhere. In pre-Asokan times, many hundreds and thousands of animals were slain to supply curry to the royal kitchen. But after his conversion to Buddhism the Gods' Beloved Gracious King first allowed only two peacocks with an occasional deer to the kitchen and then prohibited even these animals. Not only in the royal family, but even among the people, animal slaughter, castration and other cruelties were regulated. In the 27th Regnal year we find the King exempting from slaughter, the parrot, the maina, the red bird, the ruddly goose, the nandimukha, the lizard, the lac-insect, the queen-ant, the terrapin, the boneless fish, the partridge, the gangetic fowl, the sakula fish, the tortoise, the hedgehog, the squirrel, the stag, the bull, the monkey, the spotted deer, the white dove, the village dove, all quadrupeds not fit for human food or use, the sow and the she-goat if pregnant or giving milk and the young ones not yet 6 months old. He also prohibited caponing of cocks, burning of husk with animals, burning of a forest for pleasure or cruelty, gratifying one animal with another living animal, slaughter and sale of fish on Tishya and certain other days, slaughter of animals in the elephant preserves and fish ponds on the same days, castration of bulls, goats, rams and other animals and branding of horses and bulls on holidays. On anniversay days, the king ordered release

निरीक्षमाणो यथा पिता तथा प्रजासु व्यवहरन्राज्यं शशास। न केवलं नृपः किंपुनरस्य देव्योऽप्युदाराशया दानशीला इति द्वितीयदेव्या तीवरमाता कारुवाक्या प्रदत्तानामाम्रवाटिकादीनां देव्या लेखे वर्णनयावगम्यते।

अशोकः पञ्चसु पञ्चसु वर्षेष्वनुसंयानं निष्क्रमयामास यत्र भेरीघोषो धर्मघोषो विमानदर्शना हस्तिदर्शनमग्निस्कन्धस्तथान्यानि दिव्यानि दृश्यानि जनेष्वभूवन्। पूर्वेषां देवानांप्रियाणां बहुमता मृगयादिपरा विहारयात्रा न स रोचयामास संबोधियात्राश्च प्रवर्तयामास यत्र श्रमणब्राह्मणानां दर्शनं च दानं च वृद्धानां दर्शनं च हिरण्यप्रतिविधानं च जानपदस्य जनस्य दर्शनं धर्मानुशिष्टिर्धर्मपरिपृच्छा चाभवन्। क्षुद्राणि निरर्थकानि बहूनि मङ्गलान्यभंकजननीभिर्विवाहे प्रजोत्पादे प्रवासे तथान्येष्ववसरेषु विहितान्यनुजानानोऽपि धर्ममङ्गलं नृपो बहु मेने यत्र दासभृतकेषु सम्यक्प्रतिपत्तिर्गुरूणामपचितिः प्राणानां संयमः श्रमणब्राह्मणानां दानमिति द्दृशानि महाफलानि कर्माण्यभूवन्। बौद्धे धर्मे बाढं प्रक्रान्तायापि सर्वेषां पाषण्डानां समवाय एवास्मै रुरुचे। अपास्रवो बहु कल्याणं दया दानं सत्यं शौचं च धर्मश्चण्डता निष्ठुरता क्रोधो मान ईर्ष्या परिभाषणं चास्रव इत्यस्य राज्ञो मतम्। निरीश्वरं बौद्धं धर्ममवलम्ब्य नेश्वरस्य नामापि गृह्णाति नृपः। परलोके स्वर्गे चास्य महती श्रद्धा किंतु परलोकशब्देन त्यक्तशरीरस्यात्मद्रव्यस्य गमनीयं कमपि स्थानविशेषमयं सामान्यजनवदभिप्रेयाय व्यक्तेः परस्य प्रातिवेशिकवर्गस्य पुत्रपौत्रादेश्च जीवनं वेति न स्पष्टम्। एवं स्वर्गशब्देन स्थानविशेषस्य वा ग्रहणं स्वयं गमनीयस्यादर्शस्य वेत्यपि न विविच्य वक्तुं युज्यते। तिष्यदिनेष्वेकाकिनापि धर्मश्रवणं पोषधागारेषु धर्मोत्सवेषूपवासं धर्मचर्यां चायमाज्ञापयामास। भगवति बुद्धे बौद्धसंघे चास्य महद्गौरवम्। संघभेदकारिणां भिक्षुकाणां भिक्षुकीणां चावदातपटपरिधापनपूर्वकगृहान्तरवासनात्मकी दण्डोनीम व्यधीयत। सर्वं भगवता

of prisoners. The kind-hearted king established two systems of cure, of men and of beasts, in his own kingdom and in the neighbouring, Greek and other kingdoms. He had brought and planted herbs useful for brutes and whereever they were not available and had trees planted and wells dug for men and beasts. Through Religious Censors assisted by subordinates, the king supervised the religous affairs of his brothers, sisters, princes and ordinary people and ruled the Empire, treating the people as his children. Not only the king but even hls queens wete noble and generous as appears from the mention in the Queen's Edict of donations onsisting of Mango groves &c. made by the 2nd Queen Karuvvaki, mother of Tivara.

Once every five years, Asoka ordered a Religious procession. These quinquennial festivals were enlivened with beats of drums, religious proclamations, chariot shows, elephant shows, fireworks and other public spectacles. Asoka did not like hunting and other pleasure tours so much loved by the former kings and replaced these with Sambodhi journeys where Catholic and Buddhisttic priests were interviewd and received gifts, gold was freely distributed, country people were received and religious preachings and religious discussions were held. Asoka allowed the numerous, frivolous and useless rituals observed by matrons on the occasions of marriages, births, departures &c.,but he preferred religious rituals during which important duties were carried out like rewarding slaves and servants, worship of seniors, control of the senses, donations to the Catholic and the Buddhistic priests. Even while fervently devoted to the Buddhistic Religion, he liked to see concord among all the Religonists. According to him,Dharma included avoidance of sin,ample goodness, kindness, charity, truthfulness and cleanliness ; while sin included fierceness harshness, anger, arrogance, envy and slanderous habit. Being a follower of the atheistic Bauddha religion, he never mentions the name of God in the inscriptions. But he has great faith in next life and heaven. It is not clear, however, whether by next life he means life somewhere to be spent by the disembodied soul-stuff as conceived by the vulgar, or life beyond that of the individual, like that which emphsises the existence of the neighbor, the children etc. In the same way it is not easy to decide whether by heaven he meant some place or the ideal to which

बुद्धेन भाषितं सुभाषितं मन्यमानोऽपि राजा मागधं सङ्घमिमान्धर्म-पर्यायान्विशेषतोऽनुवर्तनीयानुपदिशति ते यथा विनयसमुत्कर्ष-आर्यवंशा अनागतभयानि मुनिगाथा मौनेयसूत्रमुपतिष्यप्रश्नो यत्र राहुलवादो भगवता बुद्धेन मृषावादमधिकृत्य भाषितः। मृगयादिव्यसनविमुखोऽसौ धर्मयात्रा अन्वतिष्ठदित्युक्तं तासे-कस्या उदाहरणमस्य रुक्मिणीग्रामलेखे समुपलभ्यते। विंशति-वर्षाभिषिक्तो राजा पाटलिपुराल्लिच्छविचम्पकारण्यादिमध्यगं यात्रामार्गं स्तम्भैर्भूषयन्रुक्मिणीग्रामं स्वयमुपगम्योपगुप्तेन तिष्या-पराख्येण गुरुणोपदिष्टः शाक्यमुनेर्भगवतो बुद्धस्य जन्मो-द्याने पूजां विधाय तत्र शिलास्तम्भं शिलावलभीं च स्थापयित्वा-रुक्मिणीग्राममुद्बलिकमष्टभागिनं च विदधौ। ततो नाति दूरे च कनकमुनेः प्राचीनतरबुद्धस्य स्तूपं चतुर्दशवर्षाभिषिक्तो नात्मना वर्द्धितपूर्वमुपगम्य स्वयं पूजितवान्। द्वादशवर्षाभिषिक्तो महता व्ययेन निर्मितं मणिभासुरशिलं गुहाद्वयं न्यग्रोधगुहां खलतिकपर्वतगुहां च निर्ग्रन्थेभ्य आजीवकाख्यया ख्यातेभ्यो निवासाय वितीर्य सर्वपाषण्डप्रियतामात्मना द्रढयन्पुनरेकोन-विंशतिवर्षाभिषिक्तः सुप्रियगुहां तेभ्य एव विततार। संघभेदवार-णाय पाटलिपुरे बौद्धसमितिमशोको व्यधादिति जनेषु प्रसि-द्धम्। अशोकस्य पूर्वजानामजातशत्रुप्रभृतीनां तद्भ्रातृणां महेन्द्रा-दीनां तत्पत्नीनामसन्धिमित्रातिष्यरक्षितादीनां तत्पुत्रस्य कुनालस्य तन्मन्त्रिणां विराधादीनां तद्गुरूणामुपगुप्तादीनां च विषयेषु सिंहलीयकथासु भारतीयप्रबन्धेषु च परस्परं भिद्यमाना बह्व्यो जनश्रुतय उपलभ्यन्ते। अद्यापि पाटलिपुरे भिक्षुपर्वते महेन्द्र-कुमारस्य मृण्मयी मूर्तिः प्रतिवर्षं जनैर्निर्मीयते पूज्यते चैतो-ह्यानि जनश्रुतिं द्रढयन्ति चिह्नान्यपि लक्ष्यन्ते। एषु लेखेषु केवलमशोकस्यैका भार्या कारुवाकी तत्पुत्रस्तीवरश्च नाम्ना विन्यस्तौ।

तस्यास्य राज्ञः शिलापट्टकेषु शिलास्तम्भेषु गुहासु चाद्यापि बह्व्यो लेखा उपलभ्यन्ते। प्रान्तभेदात्परस्परं किञ्चिद्भिद्यमानाः

we aspire. On Tishya days even single men were advised by the king to hear the Dharma and during Poshadha festivals people were told to observe fast and practise other religions duties. Asoka had supreme respect for the Glorious Buddha and the Church. Any mendicants male or female who tried to split the Church were punished by being turned out after being clad in white clothes. He believed in every thing said by the Buddha. But he specially recommended ( to the Magadha Order) the following portions of the Scripture—the Diginity of Discipline, the Aryan Races, the Saintly Aphorisms, the Questions of Upatishya. and the Rahula tract of the Buddha on the subject of false evidence. It has been already mentioned that Asoka was not fond of hunting and other pleasures and introduced Religious journeys in their place. One example of such a journey is alluded to in the Rumindei Inscription. Being bathed as Emperor for twenty years, Asoka set out from Pataliputra and passing through the Lichchavi (Western Trihut) and Champaran, marking his course with numerous inscribed and uninscribed pillars (some of them still existing), reached at last the famous Rukmini village and under the guidance of his preceptor Upagupta alias Tishya offered worship at the garden where the Buddha was born, erected a stone terrace and a stone pillar on the site and made the village free from revenue and assigned the octroi to it. In the same year the king visited and worshiped the shrine of Kanaka Muni (an older Buddha), repaired by himself in his 15th Regnal year. Having occupied the throne for 12 years he had given two highly polished costly caves on the Khalatika hill to the Jaina monks known as Ajivikas, thus confirming his popularity with all the sects and again gave the Supriya cave to the same sect after the 21st regnal year. The tradition says that Asoka convened a Bauddha council at Pataliputra to suppress a schism among the Bauddhas. There are many stories about Asoka's ancestors Ajatasatru and others, about his brothers Mahendra &c., about his wives Asandhimitra and Tishyaakshita, about his son Kunala, about his ministers Viradha &c. and about his preceptors Upagupta &c. Conflicting versions of these stories are found in the Vamsha books of Sihala and in the Indian works like the Divyavadana. Even now at Bhiknapahari in Bankipore, a crude earthen image of the Bhiknakuar (the monk Prince = Mahendra)

प्राकृतविशेषा एषु लेखेषु प्रयुक्ताः। लिपिद्वयं ब्राह्मीति खरोष्ठीति च प्रथिताभिधानं विनियुक्तं प्रियदर्शिनो लिपिकरैः। तत्र शाहबाजगढीमानसहराख्ययोः पाश्चात्यप्रान्तीययोः प्रदेशयोर्लेखाः साम्प्रतिकपारसीकादिलिपिवद्दक्षिणतो वामं धावन्त्या खरोष्ठ्या लिखिताः। अन्ये पुनः सर्वेपि लेखा नागराक्षरवद्वामतो दक्षिणं व्रजन्त्या ब्राह्म्या विन्यस्ताः। केवलं सिद्धपुरीयलेखान्ते कतिपये वर्णा लिपिद्वयकौशलमात्मनो दर्शयता पड़ेन लिपिकरेण खरोष्ठ्या व्यलिख्यन्तेति प्रतिभाति। त इमे लेखाश्चेत्थं विभक्ताः—

(क) चतुर्दश प्रधानशिलालेखाः—

एषां प्रथमे दश १ शाहबाजगढी (कपर्दिगिरिः),
पुरुषपुर (पेशावर) मण्डले पश्चिमोत्तरप्रान्ते
२ मानसहरा, हजारामण्डले
पश्चिमोत्तरभारते
३ कालसी, देहरादूनमण्डले
४ गिरनार, सुराष्ट्रेषु (काठियावाड),
भावनगरराज्ये
५ धवली, भुवनेश्वरसमीपे पुरीमण्डले
६ जौगड, गञ्जाममण्डले

इति षट्सु स्थानेषूपलभ्यन्ते। मुम्बाप्रान्ते थानामण्डले सोपारा (शूर्पारक) प्रदेशे तु केवलं षष्ठशिलालेखस्य कतिपयशब्दात्मकं खण्डमुपलभ्यमानं तत्रापि शिलालेखानामवस्थानं सूचयति।

एकादशो द्वादशस्त्रयोदशश्च लेखः शाहबाजगढी मानसहरा कालसी गिरनार इति चतुर्ष्वेव स्थानेषु विन्यस्तः। चतुर्दशो लेखो मानसहराप्रदेशं विहायान्येषु पञ्चसु स्थानेषु दृष्टः।

(ख) कालिङ्ग शिलालेखद्वयम्—धवली, जौगड इति स्थानद्वये एकादशादिलेखत्रयस्थानीयं किमप्यन्यदेव लेखद्वयं दृश्यते यत्कालिङ्ग शिलालेखद्वयमिति विद्वद्भिरभिधीयते।

is annually erected and worshipped by low-caste people. Such things indicate that the traditions are not altogether baseless. As for his inscriptions, they mention by name only one of Asoka's wives named Karuvaki and her son Tivara.

Many inscriptions of this great king are still to be found on rocks, on stone pillars and in rock caves. Dialects, bearing slight provincial peculiarities are found in them. Two scripts, the Brahmi and the Kharoshtri have been employed. The Westernmost versions of the Rock Edicts (yet discovered) exist at Shahbazgarhi and Mansahra and they are written in Kharoshtri which runs from right to left like the Semitinc scripts. All the other inscriptions are wtitten in the Brahmi running from left to right.

The Inscriptions of Asoka can be conveniently classified as follows—

(A) The Fourteen Principal Rock Edicts :—

The 1st ten of these are found at 6 places—

1. Shahbazgarhi (Kapardigiri) in the Peshawar Dist., N. W. Frontier Provinces.

2. Mansahra, in the Hazara Dist., N.W. Frontier Prov.

3. Kalsi in the Dehra Dun Subdivisin of Dist. Saharanpur.

4. Girnar, in the Bhavangar state, Kathiawar.

5. Dhauli near Bhuvanesvara in the Puri District, Orissa.

6. Jaugada, Ganjam Dist. Madras Presid.

Discovery of a few words of the 6th Rock Edict at Sopara in the Thana Dist. Bombay Pres. indicates the Existence of the Edicts at that place of some importance in ancient times.

The Edicts XI, XII aud XII are found only at four places—Shahbazgarhi, Mansahra, Kalsi and Girnar. The Edict XIV is found at the first 5 places. It is not found at Mansahra.

(B) The two Kalinga Edicts—They take the place of XI, XII and XII at Dhauli and Jaugada. They were specially meant for the newly conquered Kalinga country.

(ग) सप्त स्तम्भलेखाः—

एषां प्रथमे षट् लेखाः १ फीरोजशाहेन तूपरप्रदेशा-
देहलीनगरमानीते स्तम्भे
२ मीरटप्रदेशात्तेनैव देहली-
नगरमानीते स्तम्भे
३ कौशाम्बीये साम्प्रतं प्रयाग-
दुर्गस्थे स्तम्भे
४ चम्पकारण्यमण्डले रहरिया-
ग्रामसमीपे अरराजमन्दिरा-
भ्यर्णवर्तिनि स्तम्भे
५ तस्मिन्नेव मण्डले मठिया-
ग्रामसमीपस्थे स्तम्भे
६ तस्मिन्नेव मण्डले रामपुरवा-
ग्रामस्थे स्तम्भे

इति षट्सु स्थानेषूपलभ्यन्ते।

सप्तमो लेखस्तु प्रथमे देहलीस्तम्भे एव दृश्यते।

(घ) लघुशिलालेखः—

अयमेक एव लेखो भागद्वयवान्।

तत्र प्रथमो भागः—

दियढियं वढिसतीति शब्देनावसितः।

१ महिषमण्डले मैसूरराज्ये
सिद्धपुरे
२ तत्समीपे एव ब्रह्मगिरौ
३ तत्समीपे एव जटाङ्गरामेश्वरे
४ मस्किस्थाने रायचुरमण्डले
निजामराज्ये
५ सहसामनगरे आरामण्डले
विहारप्रान्ते
६ रूपनाथस्थाने मध्यप्रदेशेषु
जबलपुर (जाबालिपुर) मण्डले
७ बैराटस्थाने जयपुरराज्ये

इति सप्तसु स्थानेषूपलभ्यते।

द्वितीयो भागस्तु (इयं चेत्यादिः) सिद्धपुराभ्यर्णवर्तिनि स्थानत्रये सहसामरूपनाथयोश्चेति पञ्चसु स्थानेषूपलब्धः।

(C) The seven Principal Pillar Edicts. The 1st six of these are found on 6 Pillars—

1. On the Delhi Pillar (No. 1) brought by Feroze Shah from Topra.

2. On the Delhi Pillar (No. 2) brought by Feroze Shah from Meerat.

3. On the Kausambi Pillar standing now in the Allahabad Fort.

4. On the Lauria Pillar near village Raharia (Radhia) in the vicinity of the temple of Siva Araraj in the Champaran District.

5. On the Nandangarh Pillar near village Mathia in the Champaran District.

6. On the Ramapurwa Pillar between the B. N. W. R. Stations, Gounha and Anmolwa in the same District.

The Seventh Pillar Edict is preserved only on the Delhi Pillar No. 1.

(D) The Minor Rock Edict—

This Edict consists of two parts. The 1st part ending with the words दियढियं वढिसति has been discovered at the following 7 places—

1. Siddapura, Mysore.

2. Brahmagiri near the above.

3. Jatanga-Ramesvar near the above.

4. Maski, Raichur District in the Nizam's State.

5. Sahasram, Subdivision of Arrah, Bihar.

6. Rupnath, Jubbulpur District, C. P.

7. Bairat, Jaipur State, Rajputana.

The 2nd part (beginning with इयं च is found at five places i. e. at each of the above places except Maski and Bairat.

# प्रियदर्शिप्रशस्तयः

## शिलालेखाः

### कलसी

### प्रथमो लेखः

#### मूलम्

(१) इयं धंमलिपि देवानं पियेना पियदसिना लेखिता [।] हिदा ना किछि जिवे आलभितु पजोहितविये [।]

(२) नो पि चा समाजे कटविये [।] बहुका हि दोसा समाजसा देवानं पिये पियदसी लाजा दखति [।] अथि पि चा एकतिया समाज साधुमता देवानं पियसा पियदसिसा लाजिने [।]

(३) पुले महानससि देवानं पियसा पियदसिसा लजिने अनुदिवसं बहुनि पान-सहसानि आलभियिसु सुपठाये [।] से इदानि यदा इयं धंमलिपि लेखिता तदा तिंनि येवा पानानि आलभियंति

(४) दुवे मजुला एके मिगे [।] से पि च मिगे नो धुवे [।] एतानि पि च तिनि पानानि नो आलभियिसंति [।]

#### संस्कृतम्

(१) इयं धर्मलिपिर्देवानां प्रियेण प्रियदर्शिना लेखिता इह न कश्चिज्जीव आलभ्य प्रहोतव्यः ।

(२) नापि च समाजः कर्तव्यो बहुकान् हि दोषान् समाजस्य देवानां प्रियः प्रियदर्शी राजा पश्यति। सन्त्यपि चैके समाजाः साधुमता देवानां प्रियस्य प्रियदर्शिनो राज्ञः ।

(३) पुरा महानसे देवानां प्रियस्य प्रियदर्शिनो राज्ञोऽनुदिवसं बहूनि प्राणसहस्राण्या-लप्सत सूपार्थाय तदिदानीं यदा इयं धर्मलिपिर्लेखिता तदा त्रय एव प्राणा आलभ्यन्ते

(४) द्वौ मयूरावेको मृगः । सोपि च मृगो न ध्रुवः । एतेऽपि च त्रयः प्राणा नालप्स्यन्ते ।

# PIYADASI INSCRIPTIONS

### ROCK EDICTS

### KALSI

## EDICT I

This law-edict has been inscribed by the Gods' beloved Gracious King. No life is to be killed and sacrificed here. Nor is any gathering to be held, for the Gods' beloved Gracious King sees many defects in a gathering. But there are some gatherings of the Gods' beloved Gracious King which are considered good.

Before this, many thousand lives were killed every day for soup in the kitchen of the Gods' beloved Gracious King. But now that this law-edict has been inscribed, only three lives are killed, two peacocks and one deer. But even this deer is not permanent. Even these lives will not be killed.

---

## द्वितीयो लेखः

### मूलम्

(५) सवता विजितसि देवानं पियसा पियदसिसा लाजिने ये च अंता अथा चोडा पंडिया सातियपुतो केललपुतो तंबपंनि अंतियोगे नाम योनलाजा ये चा अंने तसा अंतियोगसा सामंता लाजानो सवता देवानं पियसा पियदसिसा लाजिने दुवे चिकिसका कटा मनुस-चिकिसा चा पसुचिकिसा चा [।] ओसधानि मनुसोपगानि चा पसोपगानि च अतता नथि

(६) सवता हालापिता चा लोपापिता चा [।] एवमेवा मुलानि चा फलानि चा अतता नथि सवता हालापिता चा लोपापिता चा [।] मगेसु लुखानि लोपितानि उदुपानानि चा खानापितानि पटिभोगाये पसुमुनिसानं [।]

### संस्कृतम्

(५) सर्वत्र विजिते देवानां प्रियस्य प्रियदर्शिनो राज्ञो ये चान्ता यथा चोडाः पाण्ड्याः सत्यपुत्रः केरलपुत्रस्ताम्रपर्णी अन्तियोको नाम यवनराजो ये चान्ये तस्यान्तियोकस्य सामन्ता राजानः सर्वत्र देवानां प्रियस्य प्रियदर्शिनो राज्ञो द्वे चिकित्से कृते मनुष्यचिकित्सा च पशु-चिकित्सा च औषधानि मनुष्योपगानि च पशूपगानि च यत्र यत्र न सन्ति

(६) सर्वत्र हारितानि च रोपितानि च। एवमेव मूलानि च फलानि च यत्र यत्र न सन्ति सर्वत्र हारितानि च रोपितानि च। मार्गेषु वृक्षा रोपिता उदपानानि च खानितानि प्रतिभोगाय पशुमनुष्याणाम्।

## EDICT II

Everywhere in the lands conquered by the Gods' beloved Gracious King and in the border lands such as the Chodas, the Pandyas, the Satyaputras, the Keralaputras, the Tamraparni (and in the lands of) Antiochos, the Ionian king, and of the princes subordinate to that Antiochos, everywhere two systems of cure—cure for men and cure for brutes have been instituted by the Gods' beloved Gracious King and herbs useful for men and for brutes have been sent and planted wherever they are not found. Likewise roots and fruits have been sent and planted wherever they are not found. On the roads trees have been caused to be planted and wells have been caused to be dug for the enjoyment of brutes and of men.

---

# तृतीयो लेखः

### मूलम्

(६) देवानं पिये पियदसि लाजा हेवं आहा [।]

(७) दुवाडसवसाभिसितेन मे इयं आनपयिते [।] सवता विजितसि मम युता लजुके पादेसिके पंचसु पंचसु वसेसु अनुसयानं निखमंतु एतायेवा अथाये इमाये धंमनुसथिया यथा अंनाये पि कंमाये [।] साधु

(८) मातापितिसु सुसुसा मितसंथुतनातिक्यानं चा बंभनसमनानं चा [।] साधु दाने [।] पानानं अनालंभे साधु अपवियाता अपभंडता साधु [।] पलिसापि च युतानि गननसि अनपयिसंति हेतुवता चा वियंजनते च [।]

### संस्कृतम्

(६) देवानां प्रियः प्रियदर्शी राजा एवमाह।

(७) द्वादशवर्षाभिषिक्तेन मया इदमाज्ञप्तं सर्वत्र विजिते मम युक्ता रज्जुकाः प्रादेशिकाश्च पञ्चसु पञ्चसु वर्षेषु अनुसंयानं निष्क्रामन्तु एतस्मै अर्थाय अस्यै धर्मानुशिष्टै यथा अन्यस्मा अपि कर्मणे। साधुः

(८) मातापित्रोः शुश्रूषा मित्रसंस्तुतज्ञातीनां च ब्राह्मणश्रमणानां च। साधु दानम्। प्राणानामनालम्भः साधुः। अल्पव्ययता अल्पभाण्डता साधुः। परिषदोऽपि च युक्तान् गणने आज्ञापयिष्यन्ति हेतुतश्च व्यञ्जनतश्च।

## EDICT III

Thus says the Gods' beloved Gracious King :—Bathed (as king) for twelve years I have issued this command. Everywhere in the lands conquered by me, let my subordinate, imperial and provincial officers make a tour every five years for this purpose, for this teaching of the Law, as for other objects. Obedience is good to mother and father, to friends, acquaintances, and relatives, to the Brahmanas and the ascetics. Charity is good. Avoidance of killing life is good. Small expense and small storage are good. The assemblies, too, shall issue orders to the officials for reckoning according to the reason and the spirit (of the Law).

---

## चतुर्थो लेखः

### मूलम्

(९) अतिकंतं अंतलं बहुनि वससतानि वधितेवा पानालंभे विहिसा चा भुतानं नातिनं असंपटिपति समनबंभनानं असंपटिपति [।] से अजा देवानं पियसा पियदसिने लाजिने धंमचलनेना भेलिघोसे अहो धंमघोसे विमनदसना

(१०) हथिनि अगिकंधानि अंनानि चा दिव्यानि लुपानि दसयितु जनस [।] आदिसे बहुहि वससतेहि ना हुतपुलुवे तादिसे अजा वढिते देवानं पियसा पियदसिने लाजिने धंमनुसथिये अनालंभे पानानं अविहिसा भुतानं नातिसु

(११) संपटिपति बंभनसमनानं संपटिपति मातापितिसु सुसुसा [।] एष चा अंने चा बहुविधे धंमचलने वधिते। वधियिसति चेवा देवानं पिये पियदसि लाजा इमं धंमचलनं [।] पुता च कं नताले चा पनातिक्या चा देवानं पियसा पियदसिने लाजिने

(१२) पवढयिसंति चेव धंमचलनं इमं आवकपं धंमसि सिलसि चा चिठितु धंमं अनुसासिसंति [।] एसे हि सेठे कंमं अं धंमानुसासनं [।] धंमचलनेपि चा नो होति असिलसा [।] से इमसा अथसा वधि अहिनि चा साधु [।] एताये अथाये इयं लिखिते [।]

(१३) इमसा अथसा वधि युजंतु हिनि च मा अलोचयिसु [।] दुवाडसवशाभिसितेना देवानं पियेना पियदशिना लाजिना लेखितं [।]

संस्कृतम्

(९) अतिक्रान्तमन्तरं बहूनि वर्षशतानि वर्धित एव प्राणालम्भो विहिंसा च भूतानां ज्ञातीनामसंप्रतिपत्तिः श्रमणब्राह्मणानामसंप्रतिपत्तिः। तदद्य देवानां प्रियस्य प्रियदर्शिनो राज्ञो धर्मचरणेन भेरीघोषोऽथो धर्मघोषो विमानदर्शनानि

(१०) हस्तिनोऽग्निस्कन्धा अन्यानि च दिव्यानि रूपाणि दर्शयितुं जनस्य। यादृशं बहुभिर्वर्षशतैर्न भूतपूर्वं तादृशमद्य वर्धितो देवानां प्रियस्य प्रियदर्शिनो राज्ञो धर्मानुशिष्ट्या अनालम्भः प्राणानामविहिंसा भूतानां ज्ञातिषु

(११) संप्रतिपत्तिर्ब्राह्मणश्रमणानां संप्रतिपत्तिर्मातापित्रोः शुश्रूषा। एतच्चान्यच्च बहुविधं धर्मचरणं वर्धितम्। वर्धयिष्यति चैव देवानां प्रियः प्रियदर्शी राजेदं धर्मचरणम्। पुत्राश्च नप्तारश्च प्रनप्तारश्च देवानां प्रियस्य प्रियदर्शिनो राज्ञः

(१२) प्रवर्धयिष्यन्ति चैव धर्मचरणमिदं यावत्कल्पं, धर्मे शीले च तिष्ठन्तो धर्ममनुशासिष्यन्ति। एतद्धि श्रेष्ठं कर्म यद्धर्मानुशासनं, धर्मचरणमपि न भवत्यशीलस्य। तदस्यार्थस्य वृद्धिरहानिश्च साधुः। एतस्मै अर्थायेदं लिखितम्।

(१३) अस्यार्थस्य वृद्धिं युञ्जन्तु हानिं च मा आलोचयन्तु। द्वादशवर्षाभिषिक्तेन देवानां प्रियेण प्रियदर्शिना राज्ञा लेखितम्।

## EDICT IV

An interval has elapsed. For many hundred years destruction of lives and slaughter of animals, disregard of kinsmen and disregard of the Brahmanas and of the ascetics have increased. So now through the virtuous practices of the Gods' beloved Gracious king, there has been sound of drums, proclamation of the Law, processions of chariots and processions of elephants and display of firework and other divine forms to be shown to the people. As has not happened before for many hundred years, now by the Gods' beloved Gracious King's teaching of the Law, have increased avoidance of destruction of life, avoidance of slaughter of animals, respect for the Brahmanas and the ascetics, obedience to mother and father, and obedience to elders. This and many other virtuous practices have increased and the Gods' beloved

Gracious king will increase such virtuous practices. The Gods' beloved Gracious King's children, grandchildren and great-grand-children will continue this virtuous practice up till the cycle's end and sticking to the virtue and piety will teach the Law, for teaching the Law is the best deed, and virtuous practice is impossible to one without piety. So development and preservation of this purpose is good. For this, this inscription has been written. Let them engage in the development hereof and not behold decrease of it. Inscribed by the Gods' beloved Gracious King, bathed (as king) for twelve years.

---

## पञ्चमो लेखः

### मूलम्

(१३) देवानं पिये पियदसि लाजा अहा कयाने दुकले [।] ए आदि कले कयानसा से दुकलं कलेति [।] से ममया बहु कयाने कटे [।] ता मम पुता चा नताले चा

(१४) पलं चा ते हि ये अपतिये मे आवकपं तथा अनुवटिसंति से सुकटं कछंति [।] ए चु हेता देसं पि हापयिसंति से दुकटं कछति [।] पापे हि नाम सुपदालये [।] से अतिकंतं अंतलं नो हुतपुलुवा धंममहामाता नाम [।] ते दसवसाभिसितेना ममया धंम-महामाता कटा [।] ते सवपासंडेसु वियापटा

(१५) धंमाधियानाये चा धंमवढिया हिदसुखाये चा धंमयुतसा योनकंबोजगंधालानं एवापि अंने अपलंता [।] भटमयेसु बंभनिभेसु अनथेसु वुधेसु हिदसुखाये धंमयुताये अपलि-बोधाये वियापटा ते [।] बंधनवधसा पटिविधानाये अपलिबोधाये मोखाये चा एयं अनुबधं पजाव ति वा

(१६) कटाभिकाले ति वा महालके ति वा वियापटा ते [।] हिदा बाहिलेसु चा नगलेसु सवेसु ओलोधनेसु भातिनं च ने भगिनिना एवापि अंने नातिक्ये सवता वियापटा [।] ए इयं धंमनिसिते ति वा दानसंयुते ति वा सवता विजितसि ममा धंमयुतसि वियापटा ते धंममहा-माता [।] एताये अठाये

(१७) इयं धंमलिपि लेखिता [।] चिलथितिक्या होतु तथा च मे पजा अनुवतंतु ।

संस्कृतम्

(१३) देवानां प्रियः प्रियदर्शी राजा आह कल्याणं दुष्करम् । यो यदि कुर्यात् कल्याणस्य स दुष्करं करोति । तन्मया बहु कल्याणं कृतं तन्मम पुत्राश्च नप्तारश्च

(१४) परं च तानि हि यान्यपत्यानि मे यावत्कल्पं तथानुवर्तिष्यन्ते तत्सुकृतं करिष्यन्ति । यस्त्वत्र देशमपि हापयिष्यति स दुष्कृतं करिष्यति । पापं हि नाम सुप्रचारम् । तदतिक्रान्तमन्तरं न भूतपूर्वा धर्ममहामात्रा नाम । त्रयोदशवर्षाभिषिक्तेन मया धर्ममहामात्राः कृतास्ते सर्वपाषण्डेषु व्यापृताः

(१५) धर्माधिष्ठानाय च धर्मवृद्ध्या हितसुखाय च धर्मयुक्तस्य यवनकम्बोजगन्धाराणाम् एवमप्यन्येऽपरान्ता भृतार्येषु ब्राह्मणेभ्येषु अनाथेषु वृद्धेषु हितसुखाय धर्मयुक्तस्य अपरिबाधाय व्यापृताः ते बन्धनवधस्य प्रतिविधानाय अपरिबाधाय मोक्षाय च । एवमनुबन्धं प्रजावन्त इति वा

(१६) कृताधिकारा इति वा महान्त इति वा व्यापृतास्त इह बाह्येषु च नगरेषु सर्वेषु अवरोधनेषु भ्रातॄणां चान्ये भगिनीनामेवमप्यन्ये ज्ञातिषु सर्वत्र व्यापृताः । एवं धर्मनिश्रिता इति वा दानसंयुक्ता इति वा सर्वत्र विजिते मम धर्मयुक्ता व्यापृतास्ते धर्ममहामात्राः । एतस्मै अर्थाय

(१७) इयं धर्मलिपिर्लेखिता चिरस्थितिका भवतु तथा च मे प्रजा अनुवर्तन्ताम् ।

## EDICT V

The Gods' beloved Gracious King says :—It is very difficult to do good, whatever of good a man can do he does a difficult thing. So I have done much good, that will be continued in the same way by my children and grand-children and children even after those up till the cycle's end, and they will do well thereby, while he who violates even a part (of this command) will do ill, for evil indeed is easy to spread. An interval has elapsed and there have been no Censors of the Law. Censors of the Law have been appointed by me bathed (as king) for thirteen years. They are employed among all the religionists to supervise the Law and for the good and happiness of the virtuous, through the progress of the Law, of the Yavanas, the Kambojas and the Gandharas and also of other border lands. Among hired servants, and masters, among the Brahmanas and the rich, among the helpless and among the old, they are employed for the welfare and happiness and for

